अग्निस्तोत्रम्
ॐ नमः सर्वभूतानां साधनाय महात्मने ।
एकद्विपञ्चधिष्ण्याय राजसूये षडात्मने ॥ १॥

नमः समस्तदेवानां वृत्तिदाय सुवर्चसे ।
शुक्ररूपाय जगतामशेषाणां स्थितिप्रदः ॥ २॥

त्वं मुखं सर्वदेवानां त्वयात्तं भगवन्हविः ।
प्रीणयस्यखिलान्देवांस्त्वत्प्राणाः सर्वदेवताः ॥ ३॥

हुतं हविस्त्वय्यनल मेधत्वमुपगच्छति ।
ततश्च जलरूपेण परिणाममुपैति यत् ॥ ४॥

तेनाखिलौषधीजन्म भवत्यनिलसारथे ।
औषधीभिरशेषाभिः सुखं जीवन्ति जन्तवः ॥ ५॥

वितन्वते नरा यज्ञांस्त्वत्सृष्टास्वोषधीषु च ।
यज्ञैर्देवास्तथा दैत्यास्तद्वद्रक्षांसि पावक ॥ ६॥

आप्याय्यन्ते च ते यज्ञास्त्वदाधारा हुताशन ।
अतः सर्वस्य योनिस्त्वं वह्ने सर्वमयस्तथा ॥ ७॥

देवता दानवा यक्षा दैत्या गन्धर्वराक्षसाः ।
मानुषाः पशवो वृक्षा मृगपक्षिसरीसृपाः ॥ ८॥

आप्याय्यन्ते त्वया सर्वे संवर्ध्यन्ते च पावक ।
त्वत्त एवोद्भवं यान्ति त्वय्यन्ते च तथा लयम् ॥ ९॥

अपः सृजसि देवत्वं त्वमत्सि पुनरेव ताः ।
पच्यमानास्त्वया ताश्च प्राणिनां पुष्टिकारणम् ॥ १०॥

देवेषु तेजोरूपेण कान्त्या सिद्धेष्ववस्थितः ।
विषरूपेण नागेषु वायुरूपः पतत्त्रिषु ॥ ११॥

मनुजेषु भवान्क्रोधो मोहः पक्षिमृगादिषु ।
अवष्टम्भोसि तरुषु काठिन्यं त्वं महीं प्रति ॥ १२॥

जले द्रवस्त्वं भगवाञ्जवरूपी तथाऽनिले ।

व्यापित्वेन तथैवाग्ने नभसि त्वं व्यवस्थितः ॥ १३॥

त्वमग्ने सर्वभूतानामन्तश्चरसि पालयन् ।
त्वामेकमाहुः कवयस्त्वामाहुस्त्रिविधः पुनः ॥ १४॥

त्वामष्टधा कल्पयित्वा यज्ञवाहमकल्पयन् ।
त्वया सृष्टमिदं विश्वं वदन्ति परमर्षयः ॥ १५॥ var स्पष्टमिदं

त्वामृते हि जगत्सर्वं सद्यो नश्येद्धुताशन ।
तुभ्यं कृत्वा द्विजः पूजां स्वकर्मविहितां गतिम् ॥ १६॥

प्रयान्ति हव्यकव्याद्यैः स्वधास्वाहाभ्युदीरणात् ।
परिणामात्मवीर्याणि प्राणिनाममरार्चित ॥ १७॥

दहन्ति सर्वभूतानि ततो निष्क्रम्य हेतयः ।
जातवेदस्त्वयैवेदं विश्वं सृष्टं महाद्युते ॥ १८॥

तवैव वैदिकं कर्म सर्वभूतात्मकं जगत् ।
नमस्तेऽनल पिङ्गाक्ष नमस्तेऽस्तु हुताशन! ॥ १९॥

पावकाद्य नमस्तेऽस्तु नमस्ते हव्यवाहन ।
त्वमेव सर्वभूतानां पावनाद्विश्वपावनः ॥ २०॥

त्वमेव भुक्तपीतानां पाचनाद्विश्वपाचकः ।
सस्यानां पाककर्ता त्वं पोष्टा त्वं जगतस्तथा ॥ २१॥

त्वमेव मेघस्त्वं वायुस्त्वं बीजं सस्यहेतुकम् ।
पोषाय सर्वभूतानां भूतभव्यभवो ह्यसि ॥ २२॥

त्वं ज्योतिः सर्वभूतेषु त्वमादित्यो विभावसुः ।
त्वमहस्त्वं तथा रात्रिरुभे सन्ध्ये तथा भवान् ॥ २३॥

हिरण्यरेतास्त्वं वह्ने हिरण्योद्भवकारणम् ।
हिरण्यगर्भश्च भवान्हिरण्यसदृशप्रभः ॥ २४॥

त्वं मुहूर्तं क्षणश्च त्वं, त्वं त्रुटिस्त्वं तथा लवः ।
कलाकाष्ठानिमेषादिरूपेणासि जगत्प्रभो! ॥ २५॥

त्वमेतदखिलं कालः परिणामात्मको भवान् ।
या जिह्वा भवतः काली कालनिष्ठाकरी प्रभो ।
तया नः पाहि पापेभ्यः ऐहिकाच्च महाभयात् ॥ २६॥

करालीनाम या जिह्वा महाप्रलयकारणम् ।
तया नः पाहि पापेभ्यः ऐहिकाच्च महाभयात् ॥ २७॥

मनोजवा च या जिह्वा लघिमागुणलक्षणा ।
तया नः पाहि पापेभ्यः ऐहिकाच्च महाभयात् ॥ २८॥

करोति कामं भूतेभ्यो या ते जिह्वा सुलोहिता ।
तया नः पाहि पापेभ्यः ऐहिकाच्च महाभयात् ॥ २९॥

सुधूम्रवर्णा या जिह्वा प्राणिनां रोगदायिका ।
तया नः पाहि पापेभ्यः ऐहिकाच्च महाभयात् ॥ ३०॥

स्फुलिङ्गिनी च या जिह्वा यतः सकलपुद्गलाः ।
तया नः पाहि पापेभ्यः ऐहिकाच्च महाभयात् ॥ ३१॥

याते विश्वसृजा जिह्वा प्राणिनां शर्मदायिनी ।
तया नः पाहि पापेभ्यः ऐहिकाच्च महाभयात् ॥ ३२॥

पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्म हुताशन ।
त्राहिमां सर्वदोषेभ्यः संसारादुद्धरेह माम् ॥ ३३॥

प्रसीद वह्ने सप्तार्चिः कृशानो हव्य वाहन ।
अग्निपावक शुक्रादि नामाष्टाभिरुदीरितः ॥ ३४॥

अग्नेऽग्रे सर्वभूतानां समुत्पत्तिरिभावसो ।
प्रसीद हव्यवाहाख्य, अभिष्टुत मयाव्यय ॥ ३५॥

त्वमक्षयो वह्निरचिन्त्य रूपः समृद्धिमन्दुष्प्रसहाऽतितीव्रः ।
तवाव्ययं भीममशेषलोक संवर्धकं हन्त्यधवातिवीर्यम् ॥ ३६॥

त्वमुत्तमं तत्त्वमशेष सत्व हृत्पुण्डरीकस्थमनन्तमीड्यम् ।
त्वया ततं विश्वमिदं चराचरं हुताशनैको बहुधा त्वमत्र! ॥ ३७॥

त्वमक्षयः सगिरिवना वसुन्धरा नभः ससोमार्कमहर्दिवाखिलं! ।

महोदधेर्जठर गतश्च बाडबो भवान्विभुः पिबति पयांसि पावक ॥ ३८॥

हुताशनस्त्वमिति सदाभि पूज्यसे महाक्रतौ नियमपरैर्महर्षिभिः ।
अभिष्टुतः पिसिसि च सोममध्वरे वषट्कृतान्यपि च हवीषि भूतये ॥ ३९॥

त्वं विप्रैः सततमिहेज्यसे फलार्थं वेदाङ्गेष्वथ सकलेषु गीय से त्वं ।
त्वद्धेतोर्यजन परायणा द्विजेन्द्रा वेदाङ्गान्यधिगमयन्ति सर्वकाले ॥ ४०॥

त्वं ब्रह्मा यजनपरस्तथैव विष्णुः भूतेशः सुरपतिरर्यमा जलेशः ।
सूर्येन्दू सकल सुरासुराश्च हव्यैः सन्तोष्याऽभिमतफलान्यथाप्नुवन्ति ॥ ४१॥

अर्चिभिः परममहोपघातदुष्टं संस्पृष्टं तव शुचि जायते समस्तम् ।
स्नानानां परममतीव भस्मना सत्सन्ध्यायां मुनिभिरतीव सेव्यसे तत् ॥ ४२॥

तत्कृत्वा त्रिदिवमवाप्नुवन्ति लोकाः सद्भक्त्या सुखनियताः समूहगतिम् ।
प्रसीदवह्ने शुचिनामधेय प्रसीद वायो विमलातिदीप्ते ॥ ४३॥

प्रसीद मे पावक वैद्युताभ प्रसीद हव्याशन पाहि मां त्वम् ।
यत्तेवह्ने शिवं रूपं ये च ते सप्त हेतयः ।
तैः पाहि न स्तुतोदेव पिता पुत्रमिवात्मजम् ॥ ४४॥

इति श्रीमार्कण्डेयपुराणे भौत्यमन्वन्तरेऽग्निस्तोत्रं सम्पूर्णम् ।
षण्णवतितमोऽध्यायः ।